# बौधायन शुल्ब सूत्रम्

अथेमेऽग्निचयाः १ तेषां भूमेः परिमाणविहारान्व्याख्यास्यामः २ अथाङ्गुलप्रमाणं चतुर्दशाणवः चतुस्त्रिंशत्तिलाः पृथुसंश्लिष्टा इत्यपरम् । दशाङ्गुलं क्षुद्रपदम् । द्वादश प्रादेशः । पृथोत्तरयुगे त्रयोदशिके । पदं पञ्चदश । अष्टाशीतिशतमीषा । चतुःशतमक्षः । षड-शीतिर्युगम् । द्वात्रिंशज्जानुः । षट्त्रिंशच्छम्याबाहू । द्विपदः प्र-क्रमः । द्वौ प्रादेशावरत्निः । अथाप्युदाहरन्ति पदे युगे प्रक्रमेऽर-त्नावियति शम्यायां च मानार्थेषु याथाकामीति । पञ्चारत्निः पुरुषो व्यामश्च । चतुररत्निर्व्यायामः ३ चतुरश्रं चिकीर्षन्यावच्चिकीर्षेत्ताव-तीं रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति । लेखामालिख्य तस्या मध्ये शङ्कुं निहन्यात् । तस्मिन्पाशौ प्रतिमुच्य लक्षणेन म-ण्डलं परिलिखेत् । विष्कम्भान्तयोः शङ्कू निहन्यात् । पूर्वस्मि-न्पाशं प्रतिमुच्य पाशेन मण्डलं परिलिखेत् । एवमपरस्मिंस्ते यत्र समेयातां तेन द्वितीयं विष्कम्भमायच्छेत् । विष्कम्भान्तयोः शङ्कू निहन्यात् । पूर्वस्मिन्पाशौ प्रतिमुच्य लक्षणेन मण्डलं परिलिखेत् । एवं दक्षिणत एवं पश्चादेवमुत्तरतस्तेषां येऽन्त्याः संसर्गास्तच्चतुरश्रं संपद्यते ४ अथापरम् । प्रमाणाद्द्विगुणां रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति । स प्राच्यर्थः । अपरस्मिन्नर्धे चतुर्भागोने लक्षणं करोति । तन्नयञ्चनम् । अर्धेऽसार्थं । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यञ्चनेन दक्षिणापायम्यार्धेन श्रोण्यंसान्निर्हरेत् ५ दीर्घचतुरश्रं चिकी-र्षन्याव-च्चिकीर्षे त्तावत्यां भूम्यां द्वौ शङ्कू निहन्यात् । द्वौ द्वावेकै-कमभितः समौ । यावती तिर्यङ्मानी तावतीं रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति । पूर्वेषामन्त्ययोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे लक्षणं करोति । मध्यमे पाशौ प्रतिमुच्य लक्ष-णस्योपरिष्टाद्दक्षिणापायम्य लक्षणे शङ्कुं निहन्यात् । सोंऽस एतेनोत्त-रोंऽसो व्याख्यातस्तथा श्रोणी ६ यत्र पुरस्तादंहीयसीं मिनुयात्तत्र तदर्धे लक्षणं करोति ७ अथापरम् । प्रमाणादध्यर्धां रज्जुमुभयतः पाशां

कृत्वापरस्मिंस्तृतीये षड्भागोने लक्षणं करोति । तन्न्यञ्छनम् । इष्टेंऽसार्थम् । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य न्यञ्छनेन दक्षिणापायम्येष्टेन श्रोणयंसान्निर्हरेत् ८ समचतुरश्रस्याक्ष्णयारज्जुर्द्विस्तावतीं भूमिं करोति ९ प्रमाणं तिर्यग्द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रिकरणी १० तृतीयकरण्येतेन व्याख्याता नवमस्तु भूमेर्भागो भवतीति ११ दीर्घचतुरश्रस्याक्ष्णयारज्जुः पार्श्वमानी तिर्यङ्मानी च यत्पृथग्भूते कुरुतस्तदुभयं करोति १२ तासां त्रिकचतुस्कयोर्द्वादशिकपञ्चिकयोः पञ्चदशिकाष्टिकयोः सप्तिकचतुर्विंशिकयोर्द्वादशिकपञ्चत्रिंशिकयोः पञ्चदशिकषट्त्रिंशिकयोरित्येतासूपलब्धिः १३ १

नानाचतुरश्रे समस्यन्कनीयसः करण्या वर्षीयसो वृध्रमुल्लिखेत् । वृध्रस्याक्ष्णयारज्जुः समस्तयोः पार्श्वमानी भवति १ चतुरश्राच्चतुरश्रं निर्जिहीर्षन्यावन्निर्जिहीर्षेत्तस्य करण्या वर्षीयसो वृध्रमुल्लिखेत् । वृध्रस्य पार्श्वमानीमक्ष्णयेतरत्पार्श्वमुपसंहरेत् । सा यत्र निपतेत्तदपच्छिन्द्यात् । छिन्नया निरस्तम् २ समचतुरश्रं दीर्घचतुरश्रं चिकीर्षंस्तदक्ष्णयापच्छिद्य भागं द्वेधा विभज्य पार्श्वयोरुपदध्याद्यथायोगम् ३ अपि वै तस्मिंश्चतुरश्रं समस्य तस्य करण्यापच्छिद्य यदतिशिष्यते तदितरत्रोपदध्यात् ४ दीर्घचतुरश्रं समचतुरश्रं चिकीर्षंस्तिर्यङ्मानीं करणीं कृत्वा शेषं द्वेधा विभज्य पार्श्वयोरुपदध्यात् । खण्डमावापेन तत्संपूरयेत् । तस्य निर्हार उक्तः ५ चतुरश्रमेकतोऽणिमच्चिकीर्षन्नणिमतः करणीं तिर्यङ्मानीं कृत्वा शेषमक्ष्णया विभज्य विपर्यस्येतरत्रोपदध्यात् ६ चतुरश्रं प्रौगं चिकीर्षन्यावच्चिकीर्षेद्द्विस्तावतीं भूमिं समचतुरश्रां कृत्वा पूर्वस्याः करण्याः मध्ये शङ्कुं निहन्यात् । तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोः श्रोण्योर्निपातयेत् । बहिस्पन्द्यमपच्छिन्द्यात् ७ चतुरश्रमुभयतः प्रौगं चिकीर्षन्यावच्चिकीर्षेद्द्विस्तावतीं भूमिं दीर्घचतुरश्रां कृत्वा पूर्वस्याः करण्याः मध्ये शङ्कुं निहन्यात् । तस्मिन्पाशौ प्रतिमुच्य दक्षिणोत्तरयोर्मध्यदेशयोर्निपातयेत् । बहिःस्पन्द्यमपच्छिन्द्यात् । एतेनापरं प्रउगं व्याख्यातम् ८ चतुरश्रं मण्डलं चि-

कीर्षन्नक्ष्णयार्धं मध्यात्प्राचीमभ्यापातयेत् । यदतिशिष्यते तस्य सह तृतीयेन मण्डलं परिलिखेत् ९ मण्डलं चतुरश्रं चिकीर्षन्विष्कम्भमष्टौ भागान्कृत्वा भागमेकोनत्रिंशधा विभज्याष्टाविंशतिभागानुद्धरेत् । भागस्य च षष्ठमष्टमभागोनम् १० अपि वा पञ्चदशभागान्कृत्वा द्वावुद्धरेत् । सैषानित्या चतुरश्रकरणी ११ प्रमाणं तृतीयेन वर्धयेत्तच्च चतुर्थेनात्मचतुस्त्रिंशोनेन । सविशेषः १२ २

अथाग्न्याधेयिके विहारे गार्हपत्यादाहवनीयस्यायतनम् । विज्ञायतेऽष्टषु प्रक्रमेषु ब्राह्मणोऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इति १ आयामतृतीयेन त्रीणि चतुरश्राण्यनूचीनानि कारयेत् । अपरस्योत्तरस्यां श्रोण्यां गार्हपत्यः । तस्यैव दक्षिणेंऽसेऽन्वाहार्यपचनः पूर्वस्योत्तरेंऽस आहवनीयः २ अपि वा गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वा संभुज्य षष्ठं सप्तमं वा भागमागन्तुकमुपसमस्य समं त्रैधं विभज्य पूर्वस्मादन्ताद् द्वयोर्भागयोर्लक्षणं करोति । गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति । तद्दक्षिणाग्नेरायतनं भवति ३ अपि वा प्रमाणं पञ्चमेन वर्धयेत् । तत्सर्वं पञ्चधा संभुज्यापरस्मादन्ताद्द्वयोर्भागयोर्लक्षणं करोति । पृष्ठ्यान्तयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्ति । तद्दक्षिणाग्नेरायतनं भवति ४ विपर्यस्तैतेनोत्करो व्याख्यातः ५ अपरेनाहवनीयं यजमानमात्री भवतीति दर्शपौर्णमासिकाया वेदेर्विज्ञायते ६ तस्यास्त्रिभागोनं पश्चात्तिरश्ची । तस्या एवार्धं पुरस्तात्तिरश्ची । एवं दीर्घचतुरश्रमेकतोऽणिमद्विहृत्य स्रक्तिषु शङ्कून्निहन्यात् ७ यावती पार्श्वमानी द्विरभ्यस्ता तावतीं रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणं करोति । दक्षिणयोः पार्श्वयोः पाशौ प्रतिमुच्य लक्षणेन दक्षिणापायम्य लक्षणे शङ्कुं निहन्यात् । तस्मिन्पाशौ प्रतिमुच्य लक्षणेन दक्षिणं पार्श्वं परिलिखेत् । एतेनोत्तरं पार्श्वं व्याख्यातम् । पूर्वं पार्श्वं तया द्विरभ्यस्तया परिलिखेत् । एवमपरम् ८ दशपदा पश्चात्तिरश्ची द्वादशपदा प्राच्यष्टापदा पुरस्तात्तिरश्चीति पाशुबन्धिकाया वेदेर्विज्ञायते ।

मानयोगस्तस्या व्याख्यातः । रथसंमितेत्येकेषाम् । विराट्संपन्ने-
त्येकेषाम् ९ शम्यामात्री चतुःस्त्रक्तिर्भवतीत्युत्तरवेदेर्विज्ञायते । समच-
तुरश्राविशेषात् १० वितृतीया वेदिर्भवतीति पैतृक्या वेदेर्विज्ञायते ।
महावेदेस्तृतीयेन समचतुरश्रकृतायास्तृतीयकरणी भवतीति । नवमस्तु
भूमेर्भागो भवति । यजमानमात्री चतुःस्त्रक्तिर्भवतीत्येकेषाम् । दिक्षु
स्त्रक्तयो भवन्ति ११ वेदितृतीये यजेतेति सौत्रामणिकीं वेदिमभ्युपदि-
शन्ति । महावेदेस्तृतीयेन समचतुरश्रकृताया अष्टादशपदा पार्श्वमानी
भवति । तस्यै दीर्घकरण्यामेकतोऽणिमत्करण्यां च यथाकामीति १२
३

प्राग्वंशः षोडशप्रक्रमायामो द्वादशव्यासोऽपि वा द्वादशप्रक्रमायामो
दशव्यासः १ तस्य मध्ये द्वादशिको विहारः २ त्रिंशत्पदानि प्रक्रमा
वा पश्चात्तिरश्ची भवति षट्त्रिंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्चीति
महावेदेर्विज्ञायते । मानयोगस्तस्या व्याख्यातः । आहवनीयात्षट्
प्रक्रमान्महावेदिः ३ तत एकस्मिन्सदः । तद्दशकम् । उदक् स-
प्तविंशत्यरत्नयः । अष्टादशेत्येकेषाम् ४ ततश्चतुर्षु हविर्धानम् ।
तद्दशकं द्वादशकं वा मानयोगस्तयोर्व्याख्यातः ५ यूपावटीयाच्छ-
ङ्कोरर्धप्रक्रममवशिष्योत्तरवेदिं विमिमीते । दशपदोत्तरवेदिर्भवतीति
सोमे विज्ञायते । मानयोगस्तस्या व्याख्यातः ६ चात्वालः शम्या-
मात्रोऽपरिमितो वा ७ अथोपरवाः प्रादेशमुखाः प्रादेशान्तरालाः ।
अरत्निमात्रं समचतुरश्रं विहृत्य स्त्रक्तिषु शङ्कून्निहन्यात् । अर्धप्रादेशे-
नार्धप्रादेशेनैकैकं मण्डलं परिलिखेत् ८ सदसः पूर्वार्धाद्द्विप्रक्रमम-
वशिष्य धिष्ण्यानां द्विप्रादेशो विष्कम्भस्तथान्तरालाः ९ आग्नीध्रा-
गारस्य पार्श्वमानी पञ्चारत्निः १० एतेन मार्जालीयो व्याख्यातः ।
तस्योदीचीं द्वारं कुर्वन्ति ११ रथाक्षान्तराला यूपावटा भवन्तीत्येका-
दशिन्यां विज्ञायते । तस्या दशानां च रथाक्षाणामेकादशानां च प-
दानामष्टाङ्गुलस्य च चतुर्विंशं भागमाददीत । स प्रक्रमः स्यात् । तेन
वेदिं विमिमीते १२ अथाश्वमेधे विंशत्याश्च रथाक्षाणामेकविंशत्याश्च

पदानामष्टाङ्गुलस्य च चतुर्विंशं भागमाददीत । स प्रक्रमः स्यात् । तेन वेदिं विमिमीते १३ अथ प्राच्येकादशिन्यां यूपार्थं वेदेः पूर्वार्धात्पदार्धव्यासमपच्छिद्य तत्पुरस्तात्प्राञ्चं दध्यात् । नात्राष्टाङ्गुलं विद्यते । न व्यतिषङ्गः १४ यूपावटाः पदविष्कम्भास्त्रिपदपरिणाहानि यूपोपराणीति १५ ४

अर्धाष्टमाः पुरुषाः प्रथमोऽग्निः । अर्धनवमा द्वितीयः । अर्धदशमास्तृतीयः । एवमुत्तरोत्तरो विधाभ्यास एकशतविधात् । तदेतत्सप्तविधप्रभृत्येकशतविधान्तम् १ अत ऊर्ध्वमेकशतविधानेव प्रत्याददीत । अनग्निकान्वा यज्ञक्रतूनाहरेत् । अन्यत्राश्वमेधात् २ अश्वमेधमप्राप्तं चेदाहरेदत ऊर्ध्वं विधामभ्यस्येन्नेतरदाद्रियेत ३ अतीतं चेदाहरेदाहृत्य कृतान्तादेव प्रत्याददीत ४ कथमु खलु विधामभ्यस्येत् ५ यदन्यत्प्रकृतेस्तत्पञ्चदश भागान्कृत्वा विधायां विधायां द्वौ द्वौ भागौ समस्येत् । ताभिरर्धाष्टमाभिरग्निं चिनुयात् ६ ऊर्ध्वप्रमाणाभ्यासं जानोः पञ्चमस्य चतुर्विंशेनैके समामनन्ति ७ अथ हैक एकविधप्रभृतीनपक्षपुच्छांश्चिन्वते ८ तन्नोपपद्यते पूर्वोत्तरविरोधात् ९ अथ हैकेषां ब्राह्मणं भवति श्येनचिदग्नीनां पूर्वा ततिरिति १० अथापरेषां न ज्यायांसं चित्वा कनीयांसं चिन्वीतेति ११ अथास्माकं । पक्षी भवति । न ह्यपक्षः पतितुमर्हति । अरत्निना पक्षौ द्राघीयांसौ भवतः । तस्मात्पक्षप्रवयांसि वयांसि । व्याममात्रौ पक्षौ च पुच्छं च भवतीति १२ नापक्षपुच्छः श्येनो विद्यते । न चासप्तविधस्य पक्षपुच्छानि विद्यन्ते । न च सप्तविधं चित्वैकविधप्रसङ्गः । तस्मात्सप्तविध एव प्रथमोऽग्निः १३ भेदान्वर्जयेत् । अधरोत्तरयोः पार्श्वसंधानं भेदा इत्युपदिशन्ति । तदग्न्यन्तेषु न विद्यते न स्रक्तिपार्श्वयोः १४ साहस्रं चिन्वीत प्रथमं चिन्वान इति १५ पञ्चमायां वा चितौ संख्यां पूरयेत् १६ द्विशताश्चेच्चिकीर्षेत्पञ्चचोडाभिर्नाकसदः समानसंख्यं प्रतीयात् १७ ५

पशुधर्मो ह वा अग्निः । यथा ह वै पशोर्दक्षिणेषामस्थ्नां यद्दक्षिणं

पार्श्वं तदुत्तरेषामुत्तरं यदुत्तरेषां दक्षिणं तद्दक्षिणेषामुत्तरं यदवाक् चोर्ध्वं च तत्समानमेवमिष्टकानां रूपाण्युपदध्यात् १ या दक्षिणावृतो लेखास्ता दक्षिणत उपदध्यात् सव्यावृत उत्तरतः । ऋजुलेखाः पश्चाच्च पुरस्ताच्च भवन्ति । त्र्यालिखिता मध्ये । अथ या विशयस्था यथा ह वै पशोः पृष्ठवंशो नैवैकस्मिन्पार्श्वे व्यतिरेकेण वर्तते नैवापरस्मिन्नेवं तासामुपधानं प्रतीयात् २ अथापि ब्राह्मणं भवति । प्रजापतिर्वा अथर्वाग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थानीति ३ तस्माद् बहिस्तन्वं चेच्चिनुयात्तन्वोपप्लवमध्यैरात्मोपप्लवमध्यात् संदध्यात् ४ प्राञ्चमेनं चिनुत इति विज्ञायते ५ अमृन्मयीभिरनिष्टकाभिर्न संख्यां पूरयेत् ६ इष्टकचिद्वा अन्योऽग्निः पशुचिदन्य इत्येतस्माद्ब्राह्मणात् ७ पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्विक्रियते यत्प्राचीनमैष्टाकाद्यजुः क्रियत इति च ८ लोकबाधीनि द्रव्याण्यवटेषूपदध्यात् ९ मण्डलमृषभं विकर्णीमितीष्टकासु लक्ष्माणि प्रतीयात् १० इष्टकामन्त्रयोरिष्टकाव्यतिरेके लोकंपृणाः संप्रद्यन्ते परिमाणाभावात् ११ अतीतानेव वेष्टकागणानत्रोपदध्यात् १२ पञ्च लोकंपृणाः १३ मन्त्रव्यतिरेकेऽक्ताः शर्कराः संधिषूपदध्यात् १४ प्राचीरुपदधाति प्रतीचीरुपदधातीति गणेषु रीतिवादः १५ प्राचीमुपदधाति प्रतीचीमुपदधातीति कर्तुर्मुखवादः १६ पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यपवर्गः १७ चतुरश्रास्वेवैतदुपपद्यते १८ ६

न खण्डामुपदध्यात् । न भिन्नामुपदध्यात् । न कृष्णामुपदध्यात् । न जीर्णामुपदध्यात् । न लक्ष्मणामुपदध्यात् । न स्वयमातृण्णां स्वयंचितावुपदध्यात् १ ऊर्ध्वप्रमाणमिष्टकानां जानोः पञ्चमेन कारयेत् । अर्धेन नाकसदां पञ्चचोडानां च २ यच्छोषपाकाभ्यां प्रतिह्रसेत पुरीषेण तत्संपूरयेत् पुरीषस्यानियतपरिमाणत्वात् ३ व्यायाममात्री भवतीति गार्हपत्यचितेर्विज्ञायते ४ चतुरश्रेत्येकेषां । परिमण्डलेत्येकेषाम् ५ चतुरश्रं सप्तधा विभज्य तिरश्चीं त्रेधा विभजेत् । अपरस्मिन्प्रस्तार उदीचीरुपदधाति ६ समचतुरश्राश्चेदुपदध्याद्व्यायामषष्ठे-

नेष्टकाः कारयेच्चतुर्थेन तृतीयेनेति । तासां नव प्रथमा द्वादश द्वितीया इति पूर्वस्मिन्प्रस्तार उपदधाति । पञ्च तृतीयाः षोडश प्रथमा इत्यपर-स्मिन् ७ परिमण्डलायां यावत्संभवेत्तावत्समचतुरश्रं कृत्वा तन्नवधा विभजेत् प्रधींस्त्रिधा त्रिधेति । अपरं प्रस्तारं तथोपदध्याद्यथा प्रध्यनी-केषु स्रक्तयो भवन्ति ८ धिष्ण्या एकचितीकाश्चतुरश्राः परिमण्डला वा ९ तेषामाग्नीध्रीयं नवधा विभज्यैकस्याः स्थानेऽश्मानमुपदध्यात् १० अथ होतुर्धिष्ण्यं नवधा विभज्य पूर्वांस्त्रिभागानेकैकं द्वेधा विभजेत् ११ अथेतरान्नवधा नवधा विभज्य मध्यमपूर्वौ द्वौ भागौ समस्येत् १२ अथ मार्जालीयं त्रेधा विभज्य पूर्वापरौ भागौ पञ्चधा विभजेत् १३ उख्यभस्मना संसृज्येष्टकाः कारयेदिति १४ संवत्सरभृत एवैतदुपपद्यते न रात्रिभृतः १५ एवमस्य मन्त्रवती चितिक्लृप्तिः १६ छन्दश्चितं त्रिषा-हस्रस्य परस्ताच्चिन्वीत कामविवेकात् तस्य रूपंश्येनाकृतिर्भवतीति १७ ७

अथ वै भवति श्येनचितं चिन्वीत सुवर्गकाम इति १ आकृतिर्द्वैविध्यम् । चतुराश्रात्मा श्येनाकृतिश्च २ विज्ञायते उभयं ब्राह्मणम् ३ पञ्च द-क्षिणायां श्रोण्यामुपदधाति पञ्चोत्तरस्याम् । बस्तो वय इति दक्षिणेंऽस उपदधाति । वृष्णिर्वय इत्युत्तरे । व्याघ्रो वय इति दक्षिणे पक्ष उप-दधाति । सिंहो वय इत्युत्तरे पुरुषो वय इति मध्य इति च ४ अथापरं वयसां वा एष प्रतिमया चीयते यदग्निरिति । उत्पततां छाययेत्यर्थः ५ समचतुरश्राभिरग्निं चिनुते दैव्यस्य च मानुषस्य च व्यावृत्त्या इति मैत्रायणीयब्राह्मणं भवति ६ तस्येष्टकाः कारयेत् पुरुषस्य चतुर्थेन पञ्च-मेन षष्ठेन दशमेनेति ७ अथाग्निं विमिमीते ८ यावान्पुरुष ऊर्ध्वबा-हुस्तावदन्तराले वेणोश्छिद्रे करोति । मध्ये तृतीयं । यदमुत्र स्पन्द्यया करोति तदिह वेणुना करोति ९ तस्यात्मा समचतुरश्रश्चत्वारः पुरुषाः । पक्षः समचतुरश्रः पुरुषः । स तु दक्षिणतोऽरत्निना द्राघीयान् । एतेनोत्तरः पक्षो व्याख्यातः । पुच्छः समचतुरश्रः पुरुषः । तमवस्ता-त्प्रादेशेन वर्धयेत् । एवं सारत्नि प्रादेशा सप्तविधः संप्रद्यतः १० उपधाने

पक्षाग्रादुत्तरतः पुरुषतृतीयवेलायां चतस्रः पञ्चम्यस्तासामभितो द्वे द्वे पादेष्टके ततोऽष्टौ चतुर्थ्यः । पक्षशेषं षड्भागीयाभिः प्रच्छादयेत् । एतेनोत्तरः पक्षो व्याख्यातः ११ पूर्वापरयोः पुच्छपार्श्वयोश्चतुर्भागीया उपदध्यात् । दक्षिणोत्तरयोः पादेष्टकाः । शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् १२ एष द्विशतः प्रस्तारः १३ अपरस्मिन्प्रस्तारे पक्षाग्रा-दुत्तरतोऽर्धव्यायामवेलायां तिस्रस्तिस्रः षष्ठ्यो द्वे द्वे द्विपदे इति विपर्या-समुपदध्यात् । तथोत्तरे १४ दक्षिणस्यां श्रोण्यां नव षष्ठ्यश्चतुरश्रकृताः । तथोत्तरस्याम् १५ नव नव षष्ठ्यो द्वे द्वे दिपदे इति दक्षिणादंसादु-त्तरादंसाद्विपर्यासमुपदध्यात् १६ शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् १७ एष द्विशतः प्रस्तारो व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् १८ ८

अथापरः १ पुरुषस्य पञ्चम्यः । ता एवैकतोऽध्यर्धाः । तासामर्ध्याः पाद्याश्च २ उपधाने । पूर्वापरयोः पक्षपार्श्वयोरर्धेष्टका उदीचीरुपदध्यात् । तथोत्तरे ३ दक्षिणोत्तरयोः पुच्छपार्श्वयोश्चतस्रश्चतस्रोऽध्यर्धा उदीचीः । पुच्छस्यावस्ताच्चतस्रोऽर्धेष्टका उदीचीः । तासामभितो द्वे पादेष्टके । जघनेन पुच्छाप्ययोरेकैकामर्धेष्टकां प्राचीम् ४ शेषमग्निं पञ्चमभा-गीयाभिः प्रच्छादयेत् ५ एष द्विशतः प्रस्तारः ६ अपरस्मिन् प्रस्तार आत्मस्रक्तिषु चतस्रः पादेष्टका उपदध्यात् । तासामभितो द्वे द्वे अर्धेष्टके । पूर्वस्मिन्ननिके पञ्च ७ पक्षाग्रयोस्तिस्रस्तिस्रोऽध्यर्धा उदीचीः । तासामन्तरलेष्वेकैकामर्धेष्टकां प्राचीम् ८ शेषमग्निं पञ्चमभागीयाभिः प्रच्छादयेत् ९ एष द्विशतः प्रस्तारो व्यत्यासं चिनुयाद्यावतः प्रस्तारां-श्चिकीर्षेत् १० ९

अथ वक्रपक्षो व्यस्तपुच्छः १ तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थ्यः । तासामर्ध्याः पाद्याश्च । नित्यमक्ष्ण्यापच्छेदनमनादेशे २ पादेष्टका-श्चतुर्भिः परिगृह्णीयादर्धपदेन पदेनाध्यर्धपदेन पदसविशेषेणेति । ते द्वे यथा दीर्घसंश्लिष्टे स्यातां तथार्धेष्टकां कारयेत् ३ अथाग्निं विमिमीत

। आत्मा द्विपुरुषायामो दशपदव्यासः । तस्य दक्षिणादंसादुत्तर-तोऽध्यर्धप्रक्रमे लक्षणं करोति । एवमपरतः । तयोरुपरिष्टात्स्पन्द्यां नियम्यांसमपच्छिन्द्यात् । एतेनेतरासां स्रक्तीनामपच्छेदा व्याख्याताः । स आत्मा ४ शिरोऽर्धषष्ठपदायाममर्धपुरुषव्यासं । तस्यांसौ प्रक्रमेण प्रक्रमेणापच्छिन्द्यात् ५ पुच्छस्य षट्पदा प्राची द्विपुरुषोदीची । तस्य पूर्वे स्रक्ति त्रिभिस्त्रिभिः प्रक्रमैरपच्छिन्द्यात् ६ पक्षो द्वाद-शपदायामो दशपदव्यासः । तस्य मध्यात्प्राञ्चि षट्पदानि प्रक्रम्य शङ्कुं निहन्यात् । श्रोण्योरेकैकम् । अथैनं स्पन्द्यया परिचिनुयात् । अन्त-स्पन्द्यमपच्छिद्य तत्पुरस्तात् प्राञ्चं दध्यात् । स निर्णामः । एतेनोत्तरस्य पक्षस्य निर्णामो व्याख्यातः ७ पक्षाग्रयोः प्रक्रमप्रमाणानि पञ्च पञ्च चतुरश्राण्यनूचीनानि कृत्वा सर्वाण्यवाञ्चमक्ष्णयापच्छिन्द्यादर्धान्यु-द्धरेत् ८ एवं सारत्निप्रादेशः सप्तविधः संपद्यतः ९ उपधाने शिरसो-ऽप्यये चतुर्थीमुपदध्यात् । हंसमुखी पुरस्तात् । पादेष्टके अभितः । तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरश्रपाद्याः । शेषे पादेष्टकाः १० अपि वा शिरसोऽग्रे हंसमुखीमुपदध्यात्तस्य अवस्ताच्चतुर्थीमुपदध्यात्पादेष्टके अभितः । तयोरवस्तादभितस्तिस्रस्तिस्रश्चतुरश्रपाद्याः । शेषे पादेष्ट-काः ११ शिरसोऽवस्तात्पञ्चपादेष्टका व्यतिषक्ता उपदध्यात् । तथा पुच्छस्य पुरस्तात् यद्यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्यात् १२ शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत् । पाद्याभिः साध्र्याभिः संख्यां पूरयेत् १३ एष द्विशतः प्रस्तारः १४ अपरस्मिन्प्रस्तारे हंसमुखी-श्चतस्रश्चतसृभिः पादेष्टकाभिः संयोजयेद्यथा दीर्घचतुरश्रं संपद्यते । तत्तिर्यक् स्वयमातृण्णावकाश उपदध्यात् १५ हंसमुख्यौ प्रतीच्यौ पुच्छाप्ययेऽर्धपदेनात्मनि विशये । तयोरवस्तादभितस्तिस्रः पादेष्टकाः प्राङ्मुखीरुपदध्यात् १६ पुच्छस्यावस्तात्पञ्चदश पादेष्टका व्यतिषक्ता उपदध्यात् १७ पादेष्टके अर्धेष्टकेति पक्षपत्राणां प्राचीर्व्यत्यासं चिनु-यात् १८ विशये यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकाश्चोपदध्यात् १९ शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत् । पाद्याभिः साध्र्याभिः संख्यां पूरयेत् २० १०

अथापरः १ पुरुषस्य पञ्चमीभिः शतमशीतिः सप्तार्धं च सारत्निप्रादेशः सप्तविधः संपद्यते २ तासां पञ्चाशद्द्वे चात्मन्यर्धचतुर्थ्यः शिरसि । पञ्चदश पुच्छे । अष्टपञ्चाशत्साध्र्या दक्षिणे पक्ष उपदध्यात् । तथोत्तरे ३ अर्धव्यायामेन स्रक्तीनामपच्छेदः । संनतं पुच्छं । पक्षयोस्त्रिभिस्त्रिभिररत्निभिरपनामः । अध्यर्ध्याभिः षट् षट् पत्राणि कुर्यात् । आकृतिः शिरसो नित्या ४ अथेष्टकानां विकाराः ५ पुरुषस्य पञ्चम्यस्ता एवैकतोऽध्यर्धाः । ता एवैकतः सपादाः । पञ्चमभागीयायाः पाद्याः साध्र्याः । तथाध्यर्धायाः । तयोश्चाष्टमभागौ तथा श्लेषयेद्यथा तिस्रः स्रक्तयो भवन्ति । पञ्चमभागीयायाश्चाष्टम्यः । तानि दश ६ आत्मनि पञ्चमभागीयाः साध्र्या उपदध्यात् । तथा पुच्छे ७ पक्षयोश्चाध्यर्धाः साध्र्याः ८ शिरसि याः संभवन्ति ९ अपरस्मिन्प्रस्तारे पूर्वयोः पक्षाप्ययोरेकैकामुभयीमुपदध्यात् । एकैकामपरयोः । द्वे द्वे शिरसः पार्श्वयोः १० पुच्छस्यावस्तादध्यर्धाः प्राचीर्यथावकाशम् । पार्श्वयोः पाद्याः साष्टमभागाः ११ पक्षयोश्चाध्यर्धाः सावयवाः १२ शेषं यथायोगं यथासंख्यं यथाधर्मं चोपदध्यात् १३ ११

कङ्कचित एतेनात्मा पुच्छं च व्याख्यातम् १ शिरसि पञ्चोपदध्यात् । तस्याकृतिर्व्याख्यात २ सप्तपञ्चाशद्दक्षिणे पक्ष उपदध्यात् । तथोत्तरे ३ व्यायामेन सप्रादेशेन पक्षयोरपनामः । पञ्चमभागीयाध्र्याभिः षट् षट् पत्राणि कुर्यात् । अध्यर्धावशिष्यते ४ तया पुच्छस्यावस्तात् पादावरत्निमात्रावरत्न्यन्तरालौ प्रादेशव्यासौ भवतः । तयोरवस्तादभितो द्वौद्वावष्टमभागौ प्राग्भेदावुपदध्यात् ५ एवं सारत्निप्रादेशः सप्तविधः संपद्यते ६ अथेष्टकानां विकाराः । पञ्चमभागीयाः सावयवाः । पादेष्टकां चतुर्भिः परिगृह्णीयादर्धप्रादेशेनाध्यर्धप्रादेशेन प्रादेशेन प्रादेशसविशेषेनेति । अध्यर्धेष्टकां चतुर्भिः परिगृह्णीयादर्धव्यायामेन द्वाभ्यामरत्निभ्यामरत्निसविशेषेनेति । ताः षट् ७ तासां चतुरश्रपाद्याः साष्टमभागाः पादयोरुपधाय शेषं यथायोगं यथासंख्यं यथाधर्मं चोपदध्यात् ८ १२

अलजचित एतेनात्मा शिरः पुच्छं च व्याख्यातं पादावपोद्धृत्य १ त्रिषष्टिर्दक्षिणे पक्ष उपदध्यात् । तथोत्तरे २ पुरुषेण पक्षयोरपनामः ३ अपरस्मादपनामात्प्राञ्चमरत्निं मित्वा तस्मिन्स्पन्द्यां नियम्यापरं पक्षप-त्रापच्छेदमन्वायच्छेत् ४ एवं पञ्च पञ्चम्यः साध्र्या उद्धृता भवन्ति ५ पादेष्टकामपनाम उपध्याय तासां चतुरश्र पाद्याः साष्टमभागा अपोद्धृत्य शेषं यथायोगं यथासंख्यं यथाधर्मं चोपदध्यात् ६ १३

प्रौगचितं चिन्वीतेति १ यावानग्निः सारत्निप्रादेशस्तावत्प्रौगं कृत्वा तस्यापरस्याः करण्या द्वादशेनेष्टकास्तदर्धव्यासाः कारयेत् । तासाम-ध्यर्ाः पाद्याश्च २ तासां द्वे अर्धेष्टके बाह्यसविशेषे चुबुक उपदध्या-दध्यर्ाश्चान्तयोः ३ शेषमग्निं बृहतीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् ४ अपरस्मिन्प्रस्तारेऽपरस्मिन्ननीके सप्तचत्वारिंशत्पादेष्टका व्य-तिषक्ता उपदध्यात् ५ चुबुक एकां शूलपाद्याम् ६ दीर्घे चेतरे चतस्रः स्वयमातृण्णावकाश उपदध्यादध्यर्ाश्चान्तयोः ७ शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् ८ १४

उभयतः प्रौगं चिन्वीतेति १ यावानग्निः सारत्निप्रादेशस्तावदुभयतः प्रौगं कृत्वा नवमेन तिर्यङ्मान्याः प्रौगचितोक्ता विकाराः २ तथोपधानम् ३ अपरस्मिन्प्रस्तारे चुबुकयोर्द्ध्वे पादेष्टके उपदध्यात् । संध्यन्तयोश्च दीर्घपाद्ये ४ दीर्घे चेतरे च चतस्रः स्वयमातृण्णावकाश उपदध्या-दध्यर्ाश्चान्तयोः ५ शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेदर्धेष्टकाभिः संख्यां पूरयेत् ६ १५

रथचक्रचितं चिन्वीतेति विज्ञायते १ द्वयानि तु खलु रथचक्राणि भवन्ति साराणि च प्रधियुक्तानि च । अविशेषात्ते मन्यामहेऽन्यतर-स्याकृतिरिति २ अथाग्निं विमिमीते । यावानग्निः सारत्निप्रादेश-स्तावतीं भूमिं परिमण्डलां कृत्वा तस्मिन्यावत्संभवेत्तावत्समचतुरश्रं कृत्वा तस्य करण्या द्वादशेनेष्टकाः कारयेत् ३ तासां षट् प्रधावुपधाय

शेषमष्टधा विभजेत् ४ अपरं प्रस्तारं तथोपदध्याद्यथा प्रध्यनीकेषु स्त्र-क्तयो भवन्ति ५ अथापरः ६ पुरुषार्धात्पञ्चदशेनेष्टकाः समचतुरश्राः कारयेन्मानार्थाः ७ तासां द्वे शते पञ्चविंशतिश्च सारत्निप्रादेशः सप्तविधः संपद्यते ८ तास्वन्याश्चतुःषष्टिमावपेत् । ताभिः समचतुरश्रं करोति । तस्य षोडशेष्टका पार्श्वमानी भवति । त्रयस्त्रिंशदतिशिष्यन्ते । ताभिरन्तान्सर्वशः परिचिनुयात् ९ नाभिः षोडश मध्यमाः । चतुःष-ष्टिरराश्चतुःषष्टिर्वेदिः । नेमिः शेषाः १० नाभिमन्ततः परिलिखेत् । नेमिमन्ततश्चान्तरतश्च परिलिख्य । नेमिनाभ्योरन्तरालं द्वात्रिंशद्धा वि-भज्य विपर्यासं भागानुद्धरेत् । एवमावाप उद्धृतो भवति ११ नेमिं चतुःषष्टिं कृत्वा व्यवलिख्य मध्ये परिकृषेत् । ता अष्टाविंशतिशतं भवन्ति १२ अरांश्चतुर्धा चतुर्धा नाभिमष्टधा विभजेत् १३ एष प्रथमः प्रस्तारः १४ अपरस्मिन्प्रस्तारे नाभिमन्ततश्चतुर्थवेलायां परिकृषेत् । नेमिमन्तरतः १५ नेमिमन्तरतश्चतुःषष्टिं कृत्वा व्यवलिखेत् १६ अराणां पञ्चधा विभाग आपरिकर्षणयोः १७ नेम्यामन्तरालेषु द्वे द्वे नाभ्यामन्त-रालेष्वेकैकां १८ यच्छेषं नाभेस्तदष्टधा विभजेत् १९ स एष षोडशक-रणः सारो रथचक्रचित् २० १६

द्रोणचितं चिन्वीतेति विज्ञायते १ द्वयानि तु खलु द्रोणानि भवन्ति चतुरश्राणि च परिमण्डलानि च । अविशेषात्ते मन्यामहेऽन्य-तरस्याकृतिरिति २ अथाग्निं विमिमीते । चतुरश्र आत्मा भवति । तस्य त्रयः पुरुषास्त्रिभागोनाः पर्श्वमानी ३ पश्चात्त्सरुर्भवति । तस्यार्धपुरुषो दशाङ्गुलानि च प्राची । त्रिभागोनः पुरुष उदीचीति ४ एवं सारत्निप्रादेशः सप्तविधः संपद्यते ५ अथेष्टकानां विकाराः । पुरुषस्य षष्ठ्यस्ता एवैकतोऽध्यर्धाः । तासामध्यास्तिर्यग्भेदाः पुरुषस्य चतुर्थ्य इति ६ तासां त्सरुश्रोण्यन्तरालयोः षट् षष्टीरुपधाय शेषमग्निं बृहतीभिः प्रच्छादयेत् । अर्धेष्टकाभिः संख्यां पूरयेत् ७ अपरस्मि-न्प्रस्तारे दक्षिणेंऽसेऽध्यर्धामुदीचीमुपदध्यात् । तथोत्तरे ८ पूर्वस्मिन्न-नीके षड्भागीया उपदध्यात् ९ दक्षिणोत्तरयोश्चतुर्भागीयाः १० त्सरोः

पुरस्तात्पार्श्वयोद्धर्वे चतुर्भागीये उपदध्यात् । तयोरवस्तादभितो द्वे द्वे अध्यर्धे विषूची । तयोरवस्तान्मध्यदेशे द्वे षष्ठ्यौ प्राच्यौ ११ शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेत् । अर्धेष्टकाभिः संख्यां पूरयेत् १२ १७

अथापरः १ पुरुषस्य षोडशीभिर्विंशशतं सारत्निप्रादेशः सप्तविधः संपद्यते २ तासामेकामपोद्धृत्य शेषाः परिमण्डलं करोति ३ तत्पूर्वेण रथचक्रचिता व्याख्यातम् ४ षोडशीं पुरस्ताद्विशय उपधाय तया सह मण्डलं परिलिखेत् ५ यदवस्तादपच्छिन्नं तत्पुरस्तादुपदध्यात् ६ प्रधीनां सप्तधा विभागः ७ प्रधिमध्यमाः प्रक्रमव्यासा भवन्ति ८ चतुरश्राणामध्यर्धाभिः संख्यां पूरयेत् ९ अपरस्मिन्प्रस्तारे प्रधिमध्यमामोष्ठ उपधाय यदवस्तात्तद्द्वेधा विभजेत् १० स एष नवकरणो द्रोणचित्परिमण्डलः ११ समूह्य परिचाय्यौ पूर्वेण रथचक्रचिता व्याख्यातौ १२ समूह्यस्य दिक्षु चात्वालान् खानयित्वा तेभ्यः पुरीषं समूह्योपदध्यात् १३ परिचाय्य इष्टकानां देशभेदः १४ तं सर्वाभिः प्रदक्षिणं परिचिनुयात् १५ १८

श्मशानचितं चिन्वीतेति विज्ञायते १ सर्वमग्निं चतुरश्रान्पञ्चदश भागान्कृत्वा तेषामाख्यातमुपधानम् २ त्रिभिर्भागैर्भागार्धव्यासं दीर्घचतुरश्रं विहृत्य पूर्वस्याः करण्या मध्याच्छ्रोणी प्रत्यालिख्यान्तावुद्धरेत् । तस्य दशधा विभागः ३ तानि विंशतिः सर्वोऽग्निः संपद्यते ४ अपरस्मिन्प्रस्तारे प्रौगमध्येऽनूचीनं विभजेत् । तस्य षड्धा विभागः । ते द्वे पर्श्वयोरुपदध्यात् ५ भागतृतीयायामश्चतुर्थव्यासाः कारयेत् । तासामध्यर्धास्तिर्यग्भेदाः ६ ता अन्तयोरुपधाय शेषमग्निं बृहतीभिः प्राचीभिः प्रच्छादयेत् । अर्धेष्टकाभिः संख्यां पूरयेत् ७ ऊर्ध्वप्रमाणमग्नेः पञ्चमेन वर्धयेत् ८ तत्सर्वं त्रेधा विभज्य द्वयोर्भागयोश्चतुर्थेन वा नवमेन वा चतुर्दशेन वेष्टकाः कारयेत् ९ ताभिश्चतस्रो वा नव वा चतुर्दश वा चितिरुपधाय शेषमवाञ्चमक्ष्णयापच्छिन्द्यात् । अर्धमुद्धरेत् १० तस्य

नित्यो विभागो यथायोगमिष्टकानां ह्रासवृद्धि ११ १९

कूर्मचितं चिन्वीत यः कामयेत ब्रह्मलोकमभिजयेयमिति । विज्ञायते १ द्वयाः खलु कूर्मा भवन्ति वक्राङ्गाश्च परिमण्डलाश्च । अविशेषात्ते मन्यामहेऽन्यतरस्याकृतिरिति २ अथाग्निं विमिमीते । चतुरश्र आत्मा भवति । तस्य दश प्रक्रमाः पार्श्वमानी भवति । तस्य द्वाभ्यां द्वाभ्यां प्रक्रमाभ्यां स्रक्तीनामपच्छेदः ३ पूर्वस्मिन्ननीके प्रक्रमप्रमाणानि चत्वारि चतुरश्राणि कृत्वा तेषां ये अन्त्ये ते अक्ष्णयापच्छिन्द्यात् । एवं दक्षिणत एवं पश्चादेवमुत्तरतः । स आत्मा ४ शिरः पञ्चपदायाममर्धपुरुषव्यासम् । तस्यांसौ प्रक्रमेण प्रक्रमेणापच्छिन्द्यात् ५ स्रक्त्यपच्छेदे पादानुन्नयेत् । तस्य द्विपदाक्ष्णया तिरश्ची तद्द्विगुणायाममनूची । तस्य द्विपदाक्ष्णया पूर्वमंसमपच्छिन्द्यात् । एतेनेतरेषां पादानामपच्छेदा व्याख्याताः । अपरयोः पादयोरपरावंसावपच्छिन्द्यात् ६ एवं सारत्निप्रादेशः सप्तविधः संपद्यते ७ तस्येष्टकाः कारयेत्पुरुषस्य चतुर्थ्यस्तासामर्ध्याः पाद्याश्च ८ अध्यर्धपाद्याश्चतुर्भिः परिगृह्णीयात्प्रक्रमेण द्वाभ्यां पदाभ्यां पदसविशेषेणेति ९ ते द्वे यथा दीर्घसंश्लिष्टे स्यातां तथैकां कारयेत् १० द्विपदाक्ष्णयार्धेन समचतुरश्रामेकां ११ उपधाने शिरसोऽग्रे चतुरश्रामुपदध्यात् । हंसमुख्याववस्तात् १२ पञ्च पञ्च चतुरश्रा द्वे द्वे पादेष्टके इति पादेषूपदध्यात् १३ यद्यदपच्छिन्नं तस्मिन्नर्धेष्टका उपदध्यात् १४ शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत् । अर्धेष्टकाभिः संख्यां पूरयेत् १५ अपरस्मिन्प्रस्तारे शिरसोऽग्रे हंसमुखीमुपदध्यात्पादेष्टके अभितः १६ तयोरवस्तादभितो द्वे द्वे अध्यर्ध पाद्ये विषूची १७ तयोरवस्तादभितश्छेदसंहिते द्वे पादेष्टके १८ द्वे द्वे द्विपदे तिस्रस्तिस्रोऽर्धेष्टका इति पादेषूपदध्यात् १९ यद्यदपच्छिन्नं तस्मिन्नर्धेष्टकाः पादेष्टकश्चोपदध्यात् २० शेषमग्निं चतुर्भागीयाभिः प्रच्छादयेत् । अर्धेष्टकाभिः संख्यां पूरयेत् २१ २०

अथापरः १ पुरुषस्य षोडशीभिर्विंशशतं सारत्निप्रादेशः सप्तविधः

संपद्यते २ तासां पञ्च षोडशीरपोद्धृत्य शेषाः परिमण्डलं करोति ।
तदुत्तरेण द्रोणचिता व्याख्यातम् ३ अथ ताः पञ्च षोडश्यस्ताभि-
रवान्तरदिक्षु पादानुन्नयेच्छिरः पुरस्तात् । तासां परिकर्षणं व्याख्यातम्
४ प्रधीनां सप्तधा विभागः प्रधिमध्यमाः प्रक्रमव्यासा भवन्ति ५
यदतिरिक्तं संपद्यते तच्चतुरश्राणामध्यर्धाभिर्योयुज्येत ६ अपरस्मिन्प्रस्तारे
पादानां शिरोवद्विभागः शिरसः पादवत् ७ व्यत्यासं चिनुयाद्यावतः
प्रस्तारांश्चिकीर्षेत् ८ कूर्मस्यान्ते तनु पुरीषमुपदध्यान्मध्ये बहुलम् ।
एतदेव द्रोणे विपरीतम् ९ अथ हैक एकविधप्रभृतीन्प्रौगादीन् ब्रुवते
१० समचतुरश्रानेक आचार्याः । तस्य करण्या द्वादशेनेष्टकाः कारा-
येत्तासामध्यर्धाः पाद्याश्च ११ अथाश्वमेधिकस्याग्नेः पुरुषाभ्यासो ना-
रत्निप्रादेशानां १२ प्राकृतो वा त्रिगुणः । त्रिस्तावोऽग्निर्भवतीत्येक-
विंशोऽग्निर्भवतीत्युभयं ब्राह्मणमुभयं ब्राह्मणम् १३ २१

इति बौधायनशुल्बसूत्रम्